तु—यथा गौरित्यस्य पदस्यार्थे गावीति(१) प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रतिपादयतीति । न च शब्दान्वाख्यानं स्वर्थम् । अनेन शब्देन गोशब्दमेवासौ प्रतिपद्यते गोशब्दात् ककुदादिमन्तमर्थम् । तथा प्रतिज्ञाद्यवयवविपर्यासेना(२)नुपूर्वी प्रतिपद्यते आनुपूर्व्या चार्थ(३)मिति । एतत् कथम् ? । पूर्वं तावत् कर्मोपादीयते ततः करणम् मृत्पिण्डाद्युदाहरणम् अनेकधा लोक इति । यत्पुनरेतत् समयानभ्युपगमात् इति ? नायं समयोऽपि स्वर्थस्यानुपूर्वी, सोयमर्थस्यानुपूर्वीमन्वाचक्षाणोनाभ्याख्येय इति । यत्पुनरेतत्प्रयोगादिति ? । न, निग्रहस्थानविषयापरिज्ञानात्—शास्त्रे वाक्यान्यर्थसंग्रहार्थमुपादीयन्ते संगृहीतं स्वर्थं वाक्येन प्रतिपादयिता प्रयोगकाले प्रतिज्ञादिकयाऽऽनुपूर्व्या प्रतिपादयतीति ॥

हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

यस्मिन् वाक्ये प्रतिज्ञादीनामन्यतमोऽवयवो न भवति तद्वाक्यं न्यूनं वेदितव्यम् । तत् कथं निग्रहस्थानम् ? । न साधनाभावे साध्यसिद्धिरिति ।

एके तु प्रतिज्ञान्यूनं नास्तीत्याचक्षते । एतत् तु न युक्तम् । प्रतिज्ञामात्रेण प्रयोगो विकल्पतः पर्यनुयोज्यः । यः प्रतिज्ञान्यूनवाक्यं ब्रूते किमयं निगृह्यते अथ नेति ?, यदि निगृह्यते ?, कतमत् ? निग्रहस्थानमिति ? न हि हेत्वाभासादयो ऽत्र सन्तीति । न च हेत्वादिदोषाः सन्तीति निग्रहं चाभ्युपैति, तस्मात् प्रतिज्ञान्यूनमेवेति । अथ न निग्रहः ? न्यूनं वाक्यमर्थं साधयतीति साधनाभावे सिद्धिरभ्युपगता भवति । यत्तु ब्रवीषि सिद्धान्तपरिग्रह एव

(१) गौरित्यस्य शब्दस्यार्थे गावीति ।
(२) विपर्ययेणा—पा० ६ पु० ।
(३) आनुपूर्व्याचार्थम्—पा० ६ पु० ।

प्रतिज्ञा ? एतदपि न बुद्ध्यामहे कर्मण उपादानं प्रतिज्ञा । सामान्यविशेषवतोऽवधारितस्य वस्तुनः परिग्रहः सिद्धान्त इति ॥

हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

यस्मिन् वाक्ये हेतू द्वौ दृष्टान्तौ द्वौ तद्वाक्यमधिकं निग्रहस्थानमाधिक्यात् ।

तच्च न, दार्ढ्यादित्येके एके—तु ब्रुवते नेदं निग्रहस्थानं दार्ढ्यात्—दार्ढ्यं हि ज्ञाप्यस्य भूयोभिर्ज्ञापकैर्दृष्टं यथा धूमालोकाभ्यामग्नेरिति । न, दार्ढ्यार्थानभिधानात्—भूयोभिर्ज्ञापकैर्दार्ढ्यं भवतीति न दार्ढ्यार्थोऽभिधीयते किं ब्रवीषि दार्ढ्यादिति । सुतरां प्रतिपत्तिर्दार्ढ्यमिति ? तदपि तादृगेव, किमुक्तं भवति सुतरामिति । अथ ब्रवीषि द्वे अपि ज्ञापके ? । सत्यं द्वे अपि ज्ञापके । एकेनैवाऽभिधानात् व्यर्थमभिधानं द्वितीयस्य प्रकाशिते दीपान्तरोपादानवदिति । अनवस्था वा प्रकाशितेऽपि साधनान्तरोपादानादिति ॥

( इति स्वसिद्धान्तानुरूपप्रयोगाभासनिग्रहस्थानप्रकरणम् । )

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥१४॥

शब्दपुनरुक्तं अनित्यः शब्दोऽनित्यः शब्द इति । अर्थपुनरुक्तं अनित्यः शब्दो निरोधधर्मको ध्वान इति ॥

अनुवादे त्वपुनरुक्तमर्थविशेषोपपत्तेः(१) ॥ १५ ॥

नाज्ञापनादित्येके—एके तु ब्रुवते नेदं निग्रहस्थानमज्ञापनात् । न हि परीक्षाविधेः पुनर्ब्रुवता किञ्चिदुच्यते परप्रतिपादनार्थं च वाक्यप्रयोगः पुनरभिधानेन सुतरामर्थं प्रतिपद्यत इति न निग्रहस्थानं प्रतिपादकत्वात् । सत्यं प्रतिपादयामि प्रतिपादितार्थप्रति-

(१) न्यायसूचीनिबन्धे सूत्रमिदं न दृश्यते । विश्वनाथपञ्चाननेनापि नादृतम् ।

पादकत्वात् वैयर्थ्यं स्यात् वैयर्थ्याभिग्रहस्थानं साधनविषयापरिज्ञानात् न चायं शिष्यो न गुरुस्तस्मान्नायं पुनः प्रतिपाद्यत इति ॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् ॥ १६ ॥**

पूर्ववन्निग्रहस्थानमिति ॥

( इति पुनरुक्तनिग्रहस्थानप्रकरणम् । )

**विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् ॥ १७ ॥**

शेषं भाष्ये ।

उत्तरेणावस्थानात् नेदं निग्रहस्थानमिति केचित्—उत्तरेणावस्थानात् उत्तरेण गुणदोषवता मूढत्वामूढत्वं गम्यत(१) इति किं पुनरुच्चारिते नास्ति । अस्ति हि उत्तरे कश्चित्समर्थो दृश्यते न प्रत्युच्चारणे, नासौ तावता निग्रहस्थानमर्हति । यश्चारभ्य स्वपक्षं न निर्वाहयेत् तस्य स्यात् खलीकारमात्रमिति । नोत्तरविषयापरिज्ञानात्—यद्ययं न प्रत्युच्चारयति ? निर्विषयमुत्तरं प्रसज्यते । अथोत्तरं ब्रवीति ? कथं नोच्चारयति तदिदं व्याहतमुच्यते नोच्चारयत्युत्तरं च ब्रवीतीति । अप्रतिज्ञानाच्च—नेदं प्रतिज्ञायते पूर्वमुच्चारयितव्यं पश्चादुत्तरमभिधेयमपि तु यथाकथञ्चिदुत्तरं वक्तव्यम् । उत्तरं चाश्रयाभावे न युक्त(२)मिति युक्तमप्रत्युच्चारणं निग्रहस्थानमिति ॥

**अविज्ञातं चाज्ञानम् ॥ १८ ॥**

स्फुटं भाष्ये । अप्रतिपत्तितो निग्रहस्थानम् ॥

**उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥**

श्लोकपाठादिभिरवज्ञां दर्शयन्नोत्तरं प्रतिपद्यत इति, तदप्रतिभा नाम निग्रहस्थानं सू(रु)त्वादेति ॥

---

( १ ) अमूढत्वं गम्यते—पा० ६ पु० ।

( २ ) उत्तर चाश्रयाभावेन युक्तम्—पा० ६ पु० ।

**कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥**

यत्र कर्त्तव्यं कार्यं व्यासज्य कथां विच्छिनत्ति स विक्षेपो विक्षेपः यथा रसालया मया सुक्तं प्रतिश्यायकणो मे कण्ठं क्षिणोतीत्येवमादि । तत् कथं निग्रहस्थानम् ? अज्ञाननिगूहनार्थं तु प्रत्युक्तमज्ञानमेव परिहारेणाविष्करोति ॥

( इति उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् । )

**स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥**

यः परेण चोदितं दोषमनुद्धृत्य भवतोऽप्ययं दोष इति ब्रवीति सा मतानुज्ञा परमतं स्वमतेऽनु(१)जानाति । उदाहरणं भवांश्चौरः पुरुषत्वादिति स तं प्रति ब्रूयात् भवानपीति सोऽभ्युपगम्य दोषं परपक्षेऽप्यनुजानातीति निगृहीतो वेदितव्यः अनभ्युपगच्छता(२) न पुरुषत्वं चौर्ये हेतुरिति वक्तव्यम् । किन्तु परस्वेनानतिप्रसङ्गेन सम्बन्धः तद् उत्तरापरिज्ञानान्निगृह्यत इति ।

प्रसङ्गविधानाच्च निग्रहस्थानमित्यन्ये—अपरे तु ब्रुवते नेतन्निग्रहस्थानं प्रसङ्गविधानात्—नैवायं पश्चादपि तं दोषं प्रतिपद्यते अपि तु प्रसङ्गं करोति यदि पुरुषत्वाच्चौरो भवति भवानपि पुरुषत्वसमाचौर इति । एतत्तु नात एव,—यत एवायमुत्तरं वक्तव्ये प्रसङ्गं करोति, तत एवोत्तरापरिज्ञानान्निगृह्यत इति ॥

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणम् ॥२२॥**

यो निग्रहस्थानप्राप्तं न निगृह्णाति स निगृहीतो भवति निग्रहस्थानप्राप्तस्यापरिज्ञानात् । नान्यवचनादित्यन्ये— अन्ये ब्रुवते नेदं निग्रहस्थानम् अन्योन्यस्याभिधानात्—यस्मादसौ निग्रहस्थानप्राप्तं न निगृह्णाति ब्रुवन्नन्यदुत्तरमभिधत्त इति । तच्च

(१) स्वमतत्वेनानु—पा० ६ पु० । (२) अनभ्युपगतो—पा०८ पु० ।

नात एव-यत एवासौ निग्रहस्थाने वक्तव्ये अन्यदभिधत्ते ऽत एव निगृह्यते जानानो ह्यसौ किमर्थमन्यत् ब्रवीति ॥

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २३ ॥**

अनिग्रहस्थान एवाभिधत्ते निगृहीतोऽसीति एतन्निग्रहस्थानापरिज्ञानान्निग्रहस्थानमिति ॥

( इति दोषनिरूपणमतानुज्ञादिनिग्रहस्थानत्रिकप्रकरणम् । )

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २४ ॥**

अस्योदाहरणं स्फुटं भाष्ये । प्रतिज्ञातार्थव्यतिरेकेणाभ्युपगतार्थपरित्यागान्निगृह्यत इति ॥

**हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥**

यथैव विभक्ता लक्षणेन तथैव तेषां निग्रहस्थानभाव इति । त इमे प्रमाणादय उद्दिष्टाः प्रथमसूत्रे, लक्षिताः प्रथमेऽध्याये, परीक्षिताः शेषेष्विति त्रिविधा तत्त्वस्य परिसमाप्तिरुक्ता वेदितव्येति ॥

( इति कथकान्योक्तिनिरूपणनिग्रहस्थानद्वयप्रकरणम् । )

जातीनां सप्रपञ्चानां निग्रहस्थानलक्षणम् ।
शास्त्रस्य चोपसंहारः पञ्चमे परिकीर्तितः ॥
यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ(१) ।
अकारि महतस्तस्य भारद्वाजेन वार्त्तिकम् ॥

**इति श्रीपरमर्षि-भारद्वाज-पाशुपताचार्यश्रीमदुद्द्योतकरकृतौ न्यायवार्त्तिके पञ्चमोऽध्यायः समाप्तः ॥**

॥ समाप्तोऽयं ग्रन्थः ॥

---

(१) योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ।
अयं श्लोको न्यायभाष्यान्ते दृश्यते ॥